# स्वरभक्तिविषयलक्षणम्

## स्वरभक्तिविषयम्

स्वरोत्तरोष्मणः पूर्वरेफस्य स्वरभक्तिता
ऋकारस्य स्वरूपं हि बुद्ध्वा बोद्धुं हि शक्यते १
स्वरभक्तिरतो विद्यादृकारमिह विस्तरात्
ऋकारस्य स्वरूपं हि श्लिष्टं पादचतुष्टयम् २
पादेषु तेषु विज्ञेयावादावन्ते स्वरात्मकौ
अणू रेफस्य मध्ये द्वौ विज्ञेयौ व्यंजनात्मकौ ३
रेफस्य चादिभूतं हि पादं पूर्वेण योजयेत्
स्वरात्मकेन पादेन ह्युत्तरेणोत्तरं तथा ४
स्वरपादान्वितौ पादौ स्वरभक्तिरितीरितौ
हकारे पूर्वभाग स्यादुत्तरश्शषसेषु च ५
हकारे संवृतां विद्याद्विवृतामितरत्र तु
पूर्वस्वरस्य चाल्पत्वमित्वमुत्वमिति त्रयम् ६
एतत्त्रयं विसृज्यैव स्वरभक्तिं समुच्चरेत्
स्वारात्परा स्वरभक्तिः प्रचयत्वमवाप यत् ७
--- वारे दीर्घे तु नान्त्याय स्वतंत्राधूर्षदं भवेत्
हशोत्तरो लकारश्च प्राप्नुयात्स्वरभक्तिताम् ८

इति स्वरभक्तिविषयम्

Reference:
Svarabhaktiviṣaya Lakṣaṇam, in C.K. Raja and K.M.K. Sarma, *Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library, Volume 1: Vedic,* Adyar Library and Research Center: Madras, 1942.